Bhartrihari
Vairagyasatak
वैराग्य शतक
Samskrit
Paper – Printed
1798 Sakabda
~~Old~~ ~~(very old)~~ (152 years old)
53 Folio
9.6" × 4.5"
Complete

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्रीगणेशायनमः विश्वेशंमोक्षदातारंभैरवंभीतिनाशनम् बुद्धिप्रदंबुद्धिराजंसर्वांगैर्नौ
।मिसादरम् १ लंबोदरमुखंध्यात्वानन्वाकृष्णंसदाशिवम् वैराग्यशतकव्याख्यांयथाप्रज्ञं
करोम्यहम् २ दिक्कालाद्यनवच्छिन्नामूर्त्तिर्यस्यमहात्मनः तस्मैकृष्णायमहतेतेजोरूपाय
वैनमः ३ इहखलुसकलवसुधेशाशिखामणीराजर्षिप्रवरः श्रीमद्भर्तृहरिर्वैराग्यशतक

दिक्कालाद्यनवच्छिन्नाऽनंतचिन्मात्रमूर्त्तये॰

मेवारभमाणोराजकुलोत्पन्नत्वात् राज्ञोनीतिश्रृंगाराववश्यमपेक्षिताववतः प्रथमंनीति
श्रृंगारशतकेवैराग्यशतकावतरणरूपेनिर्मायेदानींवैराग्यशतकमेवारभमाणः स्वेष्टदेवं
सदाशिवंतेजोरूपेणविशेषयन्नमति दिगिति अयंश्लोकस्तुनीतिशतकेकृतव्या



१

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ख्योपितथाप्यस्मिन् प्रकरणे मंगलरूपेण लिखितत्वात्किंचिद्व्याख्यायते दिक्कालादिना अपरिच्छिन्नात एवानंताचिन्मात्राचैतन्यमात्रं रूपं यस्याः ताहशीमूर्तिर्देहो यस्य तस्मै नम इत्यन्वयः कथंभूताय स्वानुभूतिः स्वानुभवः स एव मानं ज्ञापकं यस्य तस्मै शांताय निरुद्वेगाय तेजसे तेजोरूपायेति १ बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः भाषितं सकलं लीनं देह

स्वानुभूत्येकमानाय नमः शांताय तेजसे १ बोद्धारो मत्सरग्रस्ताः प्रभवः स्मय दूषिताः

एवतुनोबाहिः १ महतां गुणान् महत्त्वे वलीनानालोक्य शोचन्नाह बोद्धार इति बोद्धारः सदसद्विवेककर्त्तारो ऽहमेव बहुज्ञो ऽल्पज्ञं किमन्यं पृच्छेयमन्यास्मिन्नल्पज्ञत्वदोषदर्शनरूपेण मात्सर्येण ग्रस्ताः सर्पेणाभेक इवाभिगीर्णाः प्रभवः सर्वगुणग्रहणसमर्थाः मां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धनादिसंपन्नमोलोक्यसर्वएवायांतीतिविस्मयेनगर्वेणदूषिताः दुष्टांतःकरणाः अन्येतद
तिरिक्ताः अबोधेनाज्ञानेनपहृताः हतप्रायाः अतः सर्वमंगोष्वेवजीर्णंलीनंनबहिरन्येषुप्रसारि
तमितिभावः २ संसारजनितंवृत्तंस्वस्वदंनकदाचन स्वस्वरूपंभजेत्कृष्णंयदीच्छेन्मुक्ति

अबोधोपहृताश्चान्येजीर्णासंगेषुभाषितम् २ नसंसारोत्पन्नंचारितम
नुपश्यामिकुशलंविपाकःपुण्यानांजनयतिभयंमेविमृशतः

मात्मनः १ संसा
रचरितंस्वस्वरूपंनभवतीतिनप्रलुब्धान्जनान्स्वक्षयन्आहनेतिसंसारः संसरणरूपोजगद
नेकव्यापारस्तत्रभवमनेकचरितंजनकृतंनानाकर्त्तव्यरूपंकुशलंदृढस्वस्वरूपंनपश्यामि च- २
लानांपदार्थानांफलमपिचलमेवभवतीतिभावः ननुस्वर्गादिजनकाश्वमेधादियागपुण्या

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नांकस्वरूपः स्वर्गवासः फलंश्रुतमेवकथंतेषांविपाकेस्वभयजनकत्वंतत्राह विपाकइति
पुण्यानामपिकर्मणांविपाकः फलंमेममविमृशतोविचारयतोभयंजनयति नत्रकारणमा
ह महद्भिः पुण्यौघैः पुण्यसमूहैः चिरकालेनपरिगृहीताः सम्यग्धृताविषयामहांतोपि

महद्भिःपुण्यौघैश्चिरपरिगृहीताश्चविषयामहांतोजायंतेव्यसनमिवदातुं
विषयिणाम् ३ उत्खातनिर्विशंकयाक्षितिनलध्यानागिरेर्धातवोनिस्तीर्णः
सरितांपतिर्नृपतयोयत्नेनसंतोषिताः
स्वरूपतः फलदानतोविषयिणांरागिणां

व्यसनंदुःखमेवजनयितुमुत्पादयितुंजायंतेउत्पद्यंतेइतिक्षीणेपुण्येमर्त्यलोकेविशंतीतिभ
गवद्वचनाच्च ३ निखनेद्रसधांधातुगिरेर्धातुंसरोंबधैः निस्तरेदुदधिंयद्वातृष्णाशां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तिस्तक्रष्णातः १ वसुधादिखननक्रियाभ्रांतस्तत्क्रियालभ्यंवस्त्विच्छानिवृत्तयेतृष्णामेवप्रा
र्थयति उत्खातमिति गृहे निधिस्तिष्ठतिनवेतिशंकयाक्षितेस्तलपर्यंतमुत्खातंखनितं
गिरिधातवोहरितालादयोध्मातः अनेकौषधियोगेनाग्नौतापिताः सरितांपतिः समुद्रोपिपार

मंत्राराधनतत्परेणमनसानीताःश्मशानेनिशाःप्राप्तःकाणवराटकोपि
नमयातृष्णेधुनामुंचमाम् ४ तीरत्नादिलाभेच्छयांतःप्रवेशनोवानिस्तीर्णः सी
मालंधितः नृपतयोराजानोप्यनेकयत्नैरुपायैस्तोषिताः तुष्टिंप्रापिताः मंत्राराधनेवशीकरणे
तत्परेणसंलीनेनमनसाश्मशानेशवसमीपेनिशाःनीताः अतिक्रांताःएतासुक्रियासुवराट ३
कोपिनैवसंप्राप्तोलब्धोऽतोमांहेतृष्णेऽधुनैवशीघ्रंमुंचत्यजेतिप्रार्थना ४ ७

लोभादनेकदेशेषु मनोभ्रमासिलोलुप कृष्णास्मरणसंदेशंसंभ्रमभ्र | मून्यंजातमितिशेषः ७

दिगमनानेकसेवादिकरणासंतप्तः सन् तृष्णामेवनिंदतिभ्रांतमितिउ | थंवदेत् १ प्रभ्वादिसंप्र

शक्यंविषमंपर्वताटव्यादिना एवंभूतंदेशंप्रतिभ्रांतंचालितंफलंतुकिंचि | भ्रांतैः शिक्षकैर्बालैरा

संनैवलब्धंकिं बहुबहुप्रकारंवा नतुदेशगमनमात्रं कृत्वाफलंतु कस्यचित्सेवार्थं | नरैः क्षुधितैर्बंधु

भ्रांतंदेशमनेकदुर्गविषमंप्राप्तंनकिंचित्फलंत्यक्त्वाजातिकुलाभि | धितैर्नरैर्न

सेवाकृतानिष्फला

क्याह त्यक्त्वेति जातिर्ब्राह्मणक्षत्र्यादिः कुलंसत् | यादिनदृश्येनमन

भोचितमभिमानंनीचकर्माकरणरूपंत्यक्त्वासेवापिकृतासापिनिष्फलाफलभूः | शः नदारयापोति

दिपूर्वकमाह्वानंसत्कारस्तद्रहितंयथास्यात्तथाभुक्तंपरगृहे आशंकयासहवर्त | दस्थाभिप्रायादन्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰ वै॰
४

भीत्यावेतिशेषः हेतृष्णे दुर्मत्यापापरूपंकर्मतत्र निरते निमग्नेअद्यापिपा
नसंतुष्यसिअपरंकिंकारयसीतिभावः ५ खलवाग्बाणविद्धोपिनत्सेवानि

भुक्तंमानविवर्जितंपरगृहेसाशंकयाकाकवत्तृष्णेदुर्मतिपा
नाद्यापिसंतुष्यसि ५ खलोल्लापाःसोढाःकथमपितदाराधन
र्बाष्पंहसितमपिशून्येनमनसा

वारतोनस्यायन्नानंदोनि

तःप्रथमंतन्नानेकदुःखानिप्रदर्श्याशायामपिताभिदर्शयितुमाशांसा
तिक्षणपराच्छिद्रनिरीक्षकाणामालापाः नीचसंबुध्यारेदीनमंदमतइ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सोढाभंगीकृताः कथमपिकेनापिप्रकारेणतदाराधनपरैः तेषांख
स्माभिरितिशेषः तेषांकटुवचनैरुत्थितमंतर्बाष्पंभासस्तंनिरुध्य इ
प्रहासितांधीर्यैषांतेषामपिचित्तस्तंभस्तद्वारणमंजलिः प्रणामश्चकृ

कृतश्चित्तस्तंभःप्रहासितधियामंजलिरपित्वमाशेमोघाशोकि
यसिमाम् ६ आदित्यस्यगतागतैरहरहःसंक्षीयतेजीवितं
र्य्यभारगुरुभिःकालोनविज्ञायते

मनसा तथापि हे आशे मोघ

इच्छादिक् इतिवायस्याः सात्वंकिमपरं एतत्सर्वंकारयित्वापिखलानांपुरः म
रयसीतिभावः ६ गमनागमनंकुर्वन् रविर्हरतिजीवितम् सेवितंयै

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰ वै॰
५

स्फुजीविनम् १ जगदुन्मादं दुःखसहिष्णुतां कालाज्ञानं च दर्शयति आदि
मनागमनैः उदयाचलादस्ताचलं प्रतिगमनमागमनं तु ततः पुनरुदयाचलं
र्गतागतैरहरहः प्रतिदिनं जीविनमायुः क्षीयते नश्यति व्यापारैर्जगदनेक
बहुकार्यभारगुरुभिः बहूनि कार्याण्येव भारा वोढुमशक्यास्तैर्गुरुभिर्महद्भि

दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं
मुन्मत्तभूतं जगत् ७ यदायुर्गतं कियदवशिष्टमिति तु कै
षेणानुभूयते जन्मादिमरणान्तं कर्म सर्वेषामात्मनोपि दृष्ट्वा रसनेऽग
त्पद्यते अनिष्टकरणात्कश्चिदपि न निवर्त्तत इति भावः तत्र हेतुमाह

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रूपां मदिरां पीत्वा जगद्भ्रमनशीलं उन्मत्तभूतं कर्तव्याकर्तव्यविचारशून्यं जातमिति शेषः ७

अतिदीनमुखैः पुत्रैर्युक्ता पत्नी कदंबरा न भवेद्गेहिनो गेही देहीतीह कथं वदेत् १ पुत्रादिसंब

होविवेकिनामपि दुःखद इत्याह दीनेति दीनेभ्योप्यतिदीनानि मुखानि येषां तैः शिशुकैर्बालैरा

कृष्टं जीर्णमंबरं वस्त्रं यस्याः सा कथंभूतैः क्रोशद्भिरन्नार्थं रुदद्भिरन्यैश्च गृहनरैः क्षुधितैर्विधु

दीनादीनमुखैः सदैव शिशुकैराकृष्टजीर्णांबरा क्रोशद्भिः क्षुधितैर्नरैर्न
विधुरा दृश्येत चेद्गेहनी

रा तिदुःखवती एतादृशी गेहनी भार्या नेत् यदि न दृश्येन भव

सिना जनेनेति शेषः याञ्चाभंगभयेन याञ्चा देहीति प्रार्थना तस्या भंगो नाशः न दारस्यापीति

दात्तु र्वाक्येन तद्भयेन गद्गदं सवाष्पं गलत् पतन्मदनो वर्णा तो वा त्रुट्यन्नृहा दिस्थाभिप्रायादन्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्कथनेन भंगतांप्राप्तवत् विलीनान्यस्पष्टान्यक्षराणियास्मिन्वाक्येनाल्क्रियाविशेषणेवाकोम नस्वीजनः धीरः वदेत् देहीतिकः कथयेत् स्वजाठरानलेन दग्धस्यजठरस्यार्थेस्वोदरपूरणार्थे स्यर्थः अत्रआकारप्रश्लेषः कार्योन्यथार्थभ्रंशः स्यात् ८ स्त्रीयानां मरणं हस्यास्यत्का शा॰ ३

याच्ञाभंगभयेनगद्गदगलत्त्रुट्यद्विलीनाक्षरंकोदेहीतिवदेत्स्वदग्ध जठरस्यार्थेमनस्वीजनः ८ निवृत्ताभोगेच्छापुरुषबहुमानोविगलितः समानाः स्वर्याताः सपदिसुहृदोजीवितसमाः

भीतिं मृतेः पुमान् भवसागर पारायकृष्णाच्चंद्रंसदाभजेत् १ मरणभयशंकितंपुरुषंदूषयाति निवृत्तेति भोगेच्छापूर्वं यथासीत्तथेदानींनास्त्यनोदेहेंद्रियवैकल्यात्निवृत्ताक्षीणा पुरुषेषुमध्येयोबहुमानःसत्कारः ६

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सोपिविगलितः नष्टः पुरुषेतिसंसारिणंप्रतिसंबोधनंवा समानाः स्ववयसः स्वर्यीनाः मृताः इदा
नींयेवशिष्टाः सुहृदस्तेपिजीवितसमाःजीवितेनसमंपूर्णयेषांअथवास्वजीवनतुल्यास्तेदुर्द्द
रुलिष्टंतुम्रियंनांवा तैःकिमित्यर्थः आसनादुत्थानंशनैर्नवेगात्तदपियष्ट्याश्रयेणलगुडाधारेणन

शनैर्यष्ट्युत्थानंघनतिमिररुद्धेचनयने अहोधृष्टःकायस्तदपिमरणापायचकितः
१ हिंसाशून्यमयत्नलभ्यमशनंधात्रामरुत्कल्पितंव्यालानांपशवस्तृणांकुरभु
जः सृष्टाः स्थलीशायिनः स्वत इत्यर्थः घनेननिबिडेनतिमिरेणांधकारेणरुद्धे आवृतेन
यनेअहोआश्चर्यंतदपिसर्वेषांनिधनंदृष्ट्वापिस्वमरणरूपोयोऽपायोनाशस्तस्मिन्चकितः शं
कितः अहमपिमरिष्यामिकिमितिभीतइतियावत् १ धात्रातुनिर्मितास्सृष्टिर्जीविकानयथोचि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ता कृतातः सर्वजीवानांजीविकादंहारिंभजेत् १ संसारिणांविधिकृतोस्यांत्तितनैवकृतांविष
मांटत्तिंपर्यालोच्यशोचन्नाह ।हिंसेति हिंसाशून्यंजीवबाधारहितमयत्नलभ्यमश्रमसाध्यंद
धातीतिधानानेनधारकेणपोषकेनडुधाञ् धारणपोषणयोरितिस्मरणात्व्यालानांसर्पाणांम
रुदाशुरशनंभोजनंकल्पितंविरचितंतस्त्रीकृष्णांविनाब्रह्मणापिधारणपोषणाज्ञानंसम्यङ्नास्ती-



संसारार्णवलंघनक्षमधियांवृत्तिः कृतासानृणांयामन्वेषयतांप्रयांतिसततंसर्वे समाप्तिंगुणाः

तिसूचितं तृणांकुरभुजः पशवोप्रार्थितलभ्यभोजनाः स्थलीशायिनः अ
कृत्रिमाभूमिः स्थलीतत्रशयनशीलाः संसाररूपोऽर्णवः समुद्रस्तल्लंघनेक्षमासमर्थाधीर्येषांते ७
षांनृणांसावृत्तिः कृतारचितायामन्वेषयतांसंपादयतांसर्वेगुणाः अन्वेषणादयःसमाप्तिंविरामंयां
तितृत्तयोनास्थिराभवंतीतिभावः १०

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हरेर्ध्यानं सदा कार्य्यं जगतो नाश हेतवे नार्य्यादि विषयासक्तो न नयेत्कालमात्मनः १ उभयलो
कसुखसाधनहीनं जननं निंदत्यात्मनिदर्शनाभिषेणनेति ईश्वरस्य सर्वनियंतुः पदं चरणम् जाता
वेकवचनं विधिवद्विधौ पूजाप्रकारे योविधिर्नियमस्तेन न ध्यातं अन्यथा उदर भरणनिमित्तं मा
रणपर्यंतं कपटेन ध्यानमेवेत्यर्थः किमर्थमित्याशंक्य न दर्शयति संसारस्य जनन मरणप्रवाहरू

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये स्वर्गद्वारकपाटपाटनपटुर्धर्म्मोऽपि नोपार्ज्जितः

पस्य विच्छित्तये उन्मूलनाय नाशायेत्यर्थः मुक्तिसाधनहीनं प्रद
र्श्य स्वर्गादिसुखसाधनहीनत्वं दर्शयति स्वर्गद्वारकपाटवद्दुरितं वर्त्तमानजन्मन्यन्यजन्मनि
कृतं चानस्य पाटनमुन्मूलनं पुण्यकर्म प्रायश्चित्तादि जीवाभयप्रदानादिरूपो यो धर्मः सोऽपि नो

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पार्ज्जितः उद्यम्यन गृहीतः जगतः स्थूलस्करवादापिहीनत्वं दर्शयतिनार्य्याः पीनयोरतिपुष्ट-
योः पयोधरयोः स्तनयोर्युगुलं नाहृशयोरूर्वोर्श्च युगुलं हृयं स्वप्नेपिनालिंगितं स्वांगैर्नश्लेषि
तं मातुर्यौवनमेव वनं तच्छेदने दूरीकरणेकुठाराः छेदनशस्त्राणिकेवलं नैवान्यात्किंनिस्कुन

नारीपीनपयोधरोरुयुगुलं स्वप्नेपिनालिंगितं मातुः केवलमेवयौवनवन
च्छेदेकुठारावयम् ११ भोगानभुक्तावयमेवभुक्तास्तपोनतप्तंवयमेवतप्ताः
कालोनयातोवयमेवयातास्तृष्णानजीर्णावयमेवजीर्णाः १२ मितिभावः ११ भोगा

दयस्तुनैवास्माभिः प्राप्तंनिधनंलघु तृष्णाजीर्णानमे हंतजीर्णः कृष्णां कथंभजे १ भोगाः स्रगादयोनै
वभुक्ताः किंतुतैस्तदभिलाषैर्वयमेवभुक्ताः कालोनयातोवयमेवयाताः यस्मिन्कालेयत्कर्मकर्त्तुमुचितं



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्कर्मविहीनोयातः गतः कालस्तु भगवद्विभूतित्वात् वर्त्तन एव एवंसर्वेभ्यो हनीयं तपः कृच्छ्रादि स्वधर्माचरणंवा १२ क्षमादिसाधनैर्युक्तैस्त्यक्तानगृहसंपदः मुन्युक्ते कर्मणां पाके लुब्धैः कृष्णो नसेवितः १ गृहेयदुचितं भोजनादिक्रूरवंतत्क्षमयानक्षांतं किंतु रोगादिपरवशेन संतोषादलंबु

क्षांतंनक्षमयागृहोचितंनस्फरवंत्यक्तंनसंतोषतः सोढादुःसहशीतवाततपनाः क्लेशान्नतप्तंतपः ध्यानंवित्तमहर्निशंनियमितः प्राणैर्नशंभोःपदं तत्तत्कर्मकृतंनदेवमुनिभिस्तैस्तैः फलैर्वंचितं १२

द्धया त्यक्तमपि नशीतादयः सोढाः तपनो ऽग्नि दारिद्र्यभावेनक्लेशान्नशास्त्रीयंतुतपः यज्ञाग्न्यादिरूपंतु नतप्तं तत्तत्कर्मता दृशंतादृशंकर्मकृतं तत्तत्फलैः तेषां तेषां कर्मणांफलैर्मुनिभिः कर्मोपदेष्टृभिः तज्जैन् एवनिश्चितंवंचितंलघ्वीकृतमित्यर्थः १३

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दुर्वर्णं वदनं वाल्यकेशैः शक्लैः शिरोंकितम् गात्रं तु शिथिलं सर्वं तृष्णा तारुण्यमेत्यहो १ जरया
ग्रस्तदेहस्य शिथिलांघ्रिकराक्रिया शिथिलं धीन्द्रियं भ्रांतं न स्वांतं विषयाध्वनः २ वार्धक्येपि तृष्णा
धिक्यं भवतीति दर्शयति वलीभिर्वलिभिर्मांसरूताभिः आक्रांतं व्याप्तं पलितैः सितकेशैः शिरः

वलिभिर्मुखमाक्रांतं पलितैरंकितं शिरः गात्राणि शिथिलायंते तृष्णैका तरुणा
यते १४ येनैवांबरखंडेन संवीतो निशि चंद्रमाः तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः
१५ अंकितं चिन्हितं गात्राणि करचरणाद्यवयवाः स्वक्रियास्वकुंठीभवंति परं तु तृष्णा या एका मु-
ख्या सा तु तरुणायते तारुण्यमिवाचरति १४ महत्सु दुर्गतिं दृष्ट्वा स्वास्मिन्नाशां न दूषयेत् इति शिक्षा ९
कृता सद्भिः पद्येऽस्मिन् विमलाशयैः १ अंबरखंडेनाल्पाभ्रेण संवीतो वेष्टितस्तेनैव च वस्त्वंतरेण दिवा
भानुरपि एतयोरपि यदा दौर्गत्यं दैन्यं तदा किं स्वस्मिन्निति भावः १५

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गच्छतो वास्तुनः स्वांगे महत्सौख्यं प्रदर्शितम् ॥ स्वेच्छयागमनं तस्य हृत्तापं विदधद्व्रजेत् १ चिर
तरं बहुकालमुषित्वा वासं कृत्वा एते प्रसिद्धा विषयाः हि निश्चितं यातारोऽवश्यं ध्रुवं वयास्यंति तदावि
योगे विश्लेषे को भेदो यद्यंन भेदेन जनो भोक्तास्वयमभूत् विषयान्त्यजति न नु गमशीलत्वात्स्वयमे

अवश्यं यातारश्चिरतरमुषित्वापि विषया वियोगे को भेदस्त्यजति न जनो यत्स्वय
मभूत् व्रजंतः स्वातंत्र्यादतुलपरितापाय मनसः स्वयं त्यक्ता ह्येते शमसुखमनंतं
विदधति १६

वयास्यंति को लाभस्तत्यांगे इत्याशंक्य स्वयं त्यागे सुखं स्वेच्छागमनेन
दुःखं च दर्शयति स्वेच्छाव्रजंतो विषया मनसः परितः सर्वतस्तापाय भवंति स्वयं त्यक्ताः संतः शमं शां
तं सुखं अत एवानंतमपरिच्छिन्नं विदधति कुर्वंति १६ ७ ७ ७

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विवेकेति तृषा तृष्णाशमे उपशमे सति शाम्यति उपशमं गच्छति कसति विवेकव्याकोशे विका शेसति सा परिणतिः तृष्णापरिणामः तुंगे परिष्वंगे आश्लेषे सति प्रसरति युक्तोऽयमर्थः अ- परापिया विलासिनी भवति सा तुंगे परिष्वंगे सति नरां प्रसरति न तु व्याप्तिं भजेत लब्धावकाश

तृष्णाधिकारमाह विवेकव्याकोशे विदधति शमे शाम्यति तृषा परिष्वंगे तुंगे
प्रसरति तरां सा परिणतिः जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणस्तृषापात्रं
यस्या भवति मरुतामप्यधिपतिः १७

त्वात् तथा सा तृष्णापि मरुतां देवानामप्यधिप तिः इंद्रः यस्यां तृष्णायां तृषापात्रं भवति तुंगे परिष्वंगे छेत्तुमशक्तो भवति इत्यर्थः मनुजानां तु का कथा किंविशिष्टो मरुतामधिपतिः जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणः जराजीर्णं ऐश्वर्यं तस्य ग्रसनेन यद्गहनं तस्य आक्षेपे कृपणः विध्वंसे असमर्थः अतः कारणात् तृष्णा गरीयसी १७



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कृशोति श्वाकुक्कुरः श्वानिमन्वेतिकिंविशिष्टः श्वाकृशो दुर्बलः काणः एक दृक् खंजो भग्न पादः श्रवणरहितः छिन्नकर्णः पुच्छविकलो लांगूल रहितः व्रणी पिटकव्यासः पूतिक्लिन्नः पूयरं धिनः पुनः किंभूतः श्वाकृमिकुल शतैराच्छन्नतनुः पुनः किंभूतः श्वाक्षुधा क्षामः पुनः किंभूतः

मदनविडंबनमाह कृशःकाणःखंजःश्रवणरहितःपुच्छविकलोव्रणीपू तिक्लिन्नःकृमिकुशलतैराच्छन्नतनुःक्षुधाक्षामोजीर्णःपिठरजकपालार्पि तगलःशुनीमन्वेतिश्वाहतमपिच हंत्येवमदनः १८

श्वाजीर्णः जरसाक्रांतः

पुनः किंभूतः पिठरज कपाला र्पितगलः करंड मुंड समर्पित मुखः एवंविधोमर्त्तुकामोपिश्वा शुनी मन्वेति तदपि मदनः एवनिश्चयेन हतमपि हंति १८ ७ ७ ७

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰ वै॰ भिक्षेति हाहा इति खेदे विषयास्तथापि न परित्यजंति कीदृक् समीपं न मुंचति तथापीति किं श
११ भिक्षाशनं तदपि नीरसं रसरहितं तदप्येकवारं चान्यच्छय्या च भूः अन्यच्च परिजनो निजदेहमात्रं २
चान्यत् वस्त्रं जीर्णशतखंडमपि मलीनकंथा तथापि विषया दुराशया विषोपमा यांति प्राणि-

विषयानां अधिकारमाह. भिक्षाशनं तदपि नीरसमेकवारं शय्या च भूः परि
जनो निजदेहमात्रम् वस्त्रं च जीर्णशतखंडमलीनकंथा हाहा तथापि विषया
न परित्यजंति १९ रूपतिरस्कारमाह स्तनौ मांसग्रंथी कनककलशावित्युप
मितौ मुखं श्लेष्मागारं तदपि च शशांकेन तुलितम्
नाम् १९ स्तनाविति अहो ११
इति दुःखे निंद्यं रूपं कविजनविशेषैर्गुरु कृतं कथं निंद्यं स्तनौ मांसग्रंथी परमित्युपमितौ उप

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मानितौ इति किं कनककलशौ चान्यत् मुखं श्लेष्मागारं तदपि च शशांकेन तुलितं चंद्रमसा स मानं कृतं जघनं स्रवन्मूत्रक्लिन्नं तथापि करिवर स्पर्द्धि गजेंद्र शुंडादंडेन स्पर्द्धाकारकं रूपं यस्येति स्वरूपं परं सुकविना व्यासेन वर्णितम् २० अजानन्निति अहह इति खेदे मोह महिमा

स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्द्धि जघनमहो निंद्यं रूपं कविजनविशेषैर्गुरु कृतम् २० अजानन्माहात्म्यं पततु शलभो दीपदहने स मीनोप्यज्ञानाद्बडिशयुतमश्नातु पिशितम्

गहनो वर्तते यत्तु शलभः पतंगः दीपशिखायां पततु शलभः किं कुर्वन्माहात्म्यं अजानन्स मीनो मत्स्यः अज्ञानान्मौढ्यात् बडिशयुतं पिशितं मांसं अश्नातु भक्षतु इह अस्मिन्संसारे एते वयं विजानंतोपि कामान्न मुंचामः कथंभूतान्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

 कामान् विपज्जालंजटिलान् विपदां जालोविपज्जालः तेनजटिलास्तान् अतएव मोह म- 
 हिमागरीयान् २२ विशाधितिवयं दुर्ज्जनानां पिशुनानाम विनयमनुमंतुं अंगीकर्त्तुंनो 
त्सहे नोत्साहंकूर्महे कथंभूतानां दुर्ज्जनानां नवधनमधुपानभ्रांतसर्वेंद्रियाणां नवंनवी

विजालंतोप्येते वयमिह विपज्जालजटिलान्न मुंचामः कामानहह ग
हनो मोहमहिमा २२ अथदुर्जनमुद्दिश्याह विशामलमशनायस्वा
दुपानायतोयंशयनमवनिपृष्ठेवल्कलेवाससीन ६७ ७

नोपार्ज्जितंधनं नवधनं तदेवमधुपानं मदिरापानं तेनमधुपानेन भ्रांतानि सर्वाणींद्रियाणि 
येषांतेनवधनमधुपानभ्रांतसर्वेंद्रियास्तेषां अलमत्यर्थं अशनाय भोजनाय विशंक- म

मालिनीकंदं वान्यत्स्वादु पानायत्तोयंचान्यदवनिपृष्ठेशयनंचान्यद्वासोसीवल्कलंचीरम्
२१ ।विपुलेतिपुंसांपुरुषाणांकएषमदज्वरः कसानि कतिपयपुरुषस्वाम्येसतिधन्यैः
कैश्चित्पुरापूर्वंजगज्जनितंजगत्सृष्टंकथंभूतैर्धन्यैर्विपुलहृदयैः बृहत्हृदयैः अपरैःकैः

नवधनमधुपानभ्रांतसर्वेंद्रियाणामविनयमनुमंतुंनोत्सहेदुर्जनानाम्
२२ मानितामुद्रिश्याह विपुलहृदयैर्धन्यैःकैश्चिज्जगज्जनितंपुराविधृत
मपरैर्दत्तंचान्यैर्विजित्यतृणंयथा

श्चिदपिविधृतंनिजभुजाभ्यांधारितं अन्यैः
कैश्चिदपिपुरुषैः चान्यद्दत्तंकिंकृत्वाविजित्ययथाशब्द इवार्थेवर्ततेजगत्कमिवतृणमिव
यथातृणमनायासेनदीयतेतथाजगद्विजित्यदत्तंहिनिश्चितं इहास्मिन्जीवलोके अन्येधा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰वै॰ राश्चतुर्दशभुवनानिभुंजते तथास्वल्पस्वाम्येकोयंगर्वः २२ त्वमिति हेनरेंद्रत्वंराजाव श॰
१२ र्त्तसेवयमपि उपासितगुरुप्रज्ञाभिमानोन्नतावर्त्तामहेराजेंद्रत्वं विभवैः ख्यातः नः अ ३
स्माकंयशांसिमहत्त्वानिकवयः कवीश्वरादिक्षुप्रतन्वंतिदशास्वपिदिशासुविस्तारयंति

इहहिभुवनान्यन्येधीराश्चतुर्दशभुंजतेकतिपयपुरस्वाम्येपुंसांकएष
मदज्वरः २३ निस्पृहाणामधिकारमाह त्वंराजावयमप्युपासितगुरु
प्रज्ञाभिमानोन्नताःख्यातस्त्वंविभवैर्यशांसिकवयोदिक्षुप्रतन्वंतिनः

हेमानद मानंददातीतिमानदः दोअवखंडनेइतिधातुःहेमानद हेमानखंडनआवयोरु १३
भयोरपिअंतरंनातिदूरे हेराजेंद्रयदित्वं अस्मासु पराङ्मुखोसि अनादरोऽसित-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दावयमपि एकांततो निस्पृहावर्त्तामहे त्वय्यनादरात्त्वयि विषये अनादराः २४ अभुक्ते-
तिजडा मूर्खाः विषादे कर्त्तव्ये प्रत्युत सन्तुरवं मुदं विदधाति कथं क्षितिभुजां राज्ञां तस्याभु

इत्थं मानदनातिदूरमुभयोरप्यावयोरंतरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकांततो निःस्पृहाः २४ अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैर्भुवस्तस्या लाभे कइव बहुमानः क्षितिभुजाम् तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो विषादे कर्त्तव्ये विदधति जडाः प्रत्युत मुदम् २५

वः पृथिव्या लाभे कइव बहु-
मानः यस्यां पृथिव्यां अभुक्तायां सत्यां नृपशतैः नरेंद्रसहस्रैः क्षणमपि न यातं नगतं तदंश
स्याप्यंशेन तस्याः पृथिव्या विभागस्यापि विभागे तदवयवलेशे तस्यांगस्यापि लेशेऽपि पतयः स्वामिनः
२५

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰ वै॰ मृदिति तान्पुरुषाधमान् धिक् येधुनातेभ्योपि धनकणं वांछंति कथमयं मृत्पिंडः पृथ्वीमयः श॰
१४ सर्वोपिजलरेखया वलयितः सन् नतुअणुः स्वल्पप्रमाणः तुपुनः सएवमृत्पिंडः राज्ञांगणैः ३
भुज्यते किं कृत्वा संयुगशतैः संग्रामैर्विभागीकृत्यरणशतैः अंगीकृत्यते क्षुद्रा दरिद्राः राजानः

मृत्पिंडो जलरेखया वलयितः सर्वोप्ययं नत्वणुरंगीकृत्य स एव संयुगशतै
राज्ञां गणैर्भुज्यते तद्दद्युर्ददते ऽथवा न किमपि क्षुद्रा दरिद्रा भृशं धिक् धिक्
तान्पुरुषाधमान्धनकणं वांछंति तेभ्योपि ये २६ दुर्भगसेवकस्य वाक्यमाह
ननटा नविटा नगायना नपरद्रोहनिबद्धबुद्धयः

भृशमत्यर्थे किमपि न दद्युः अथ १४
वा न ददते तानेव पुरुषान्धिक् धिक् ये तेभ्योपि वांछां कुर्वंति २६ नेति ना मे ति संबोधने नृपसद्मनि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वयं के वयं नराः नृत्यकृत्यनिविष्टाः उत्तीर्णाः नगायनान परद्रोहनिबद्धबुद्धयः परद्रोहे निबद्धा बुद्धयो येषां ते परद्रोहनिबद्धबुद्धयः वयं योषितो पि नाकिं योषितः कुचभारानमिताः कुचभारेणा समंताद्भावेन नमिताः एवंविधा अपिन २७ पुरेति पुरा पूर्वं उपशमवतां विद्वत्तावै दुःखं क्लेशहत

नृपसद्मनि नाम केवलं कुचभारानमिता न योषितः २७ पुराविद्वत्तासीदुपशमवतां क्लेशहतये गता कालेनासौ विषयस्करव सिद्धौ विषयिणां इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखान हो कष्टं सापि प्रतिदिनमधोधः प्रविशति २८

येसंसारनिवारणायासीत् असौ विद्वत्ता कालेन गता विषयिणां विषयसुखसिद्धौ गता अहो इति खेदे कष्टं विलोक्य इदानीं सापि विद्वत्ता प्रतिदिनं दिनं प्रति अधोधः प्रविशति किं कृत्वा शास्त्रविमुखान् क्षि-
तितलभुजः प्रेक्ष्य निरीक्ष्य २८

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰ वै॰ सजोतिकोपिपुरुषआसीत् यस्यपुरुषस्य कपालमुच्चैर्यथाभवतिमदनरिपोर्महेशस्यमूर्ध्नि श॰
१९ मस्तकेअलंकारविषयेविनिहितं कथंभूतंकपालंउज्ज्वलं अधुनाइदानींकैश्चित् नमद्भिः नृ- १

साहंकारंपुरुषमुद्दिश्याह सजातःकोप्यासीन्मदनरिपुणामूर्ध्नि
धवलंकपालंयस्योच्चैर्विनिहितमलंकारविषये नृभिःप्राणत्राण
प्रवणमतिभिःकैश्चिदधुनानमद्भिःकः पुंसामयमतुलदर्पज्वरभरः २९

भिः पुंसां पुरुषाणांको ऽयंअतुलदर्पज्वर भरः कथंभूतैर्नृभिः प्राणत्राणप्रवणमतिभिः १५
प्राणास्यत्राणंतत्रप्रवणामतिर्येषांतेप्राणत्राणप्रवणमतयस्तैः २९ छ छ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यतिः राजानंप्रतिवदति अर्थानामिति हे राजन् त्वमर्थानामीशिषे त्वं समर्थो भवसि वयमपि गिरां
वाणीनामीश्महे समर्था भवामः चान्यत्त्वं यावदित्थं अधुनाप्रकारेण चशूरोसि अस्माकमपि वादिदर्पज्व

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थंभूर रस्त्वं वादिदर्पज्वरशमन
विधावक्षयं पाटवं नः सेवंते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामो ह्यस्य
प्यास्थानं चेत्त्वयि मम सुतरामेष राजन्गतोस्मि २०

रशमनविधौ वादिनां दर्पः अहं-
कारस्तस्य ज्वरस्तस्य शमनविधौ अक्षयं निश्चलं पाटवं वर्तते हे राजन् त्वां बुधाः सेवंते मामपि श्रो
तुकामाः श्रोतारः सेवंते किमर्थं मतिमलहतये बुद्धिकालुष्यनाशाय अधुनापि चेत्तव आस्थानेव
चेत्तर्हि मम अपि त्वयि सुतरां आस्था नास्ति हे राजन् एषः अहं गतोस्मि २० छ छ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यदेति अहं यदा यास्मिन् प्रस्तावे मदांधः द्विप इव हस्तीव समभवं किंचिज्ज्ञः किंचिज्जानामि किं
चिज्ज्ञः यत्तदोर्नित्यः संबंधः तदा मम मनः इति अवलिप्तं अभवत् इतीति किं अहं सर्वज्ञोस्मि
यदा यस्मिन् प्रस्तावे बुधजनसकाशात् पंडितवर्गात् किंचित् अवगतं ज्ञातं तदा इति अनेन प्रकारे

यदा किंचिज्ज्ञोहं द्विप इव मदांधः समभवं तदा सर्वज्ञोस्मीत्यभवदवलि
प्तं मम मनः यदा किंचित् किंचित् बुधजनसकाशादवगतं तदा मूर्खोस्मी
ति ज्वर इव मदो मे व्यपगतः ८१

णा मे मम मदो व्यपगतो दूरीभूतः इतीति किम्
अहं मूर्खोस्मि इति मदः क इव ज्वर इव यथा कस्यापि ज्वरो याति तथा मे मम अहंकारो यातः

८१ श्रीरामचंद्रायनमः श्रीगोपालकृष्णायनमः ७



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अतीति हे बाले लब्ध ललनाभोगसुभगः कालो ऽतिक्रांतः अतिक्रामः संपूर्णीकृतः
लब्धाः आप्तलावण्याया ललनास्तासां भोगेन सुभगो मनोज्ञः लब्ध ललनाभोगसुभग इ
हास्मिन् मर्त्यलोके संसारसरणौ सुचिरं भ्रमंतः श्रांतास्म इदानीं स्वः सिंधोः स्वर्गगायास्तट

निर्ममतास्वरूपमाह अतिक्रांतः कालो लब्धललनाभोगसुभगो भ्रमं
तः श्रांताः स्मः सुचिरमिह संसारसरणौ इदानीं स्वः सिंधोस्तटभुवि समा
क्रंदनगिरः सतारैः फूत्कारैः शिवाशिवाशिवेति प्रलनुमः ३२

भुवि कच्छस्थली
षु शिवशिवशिवेति मननुमः विस्तारयामः कथंभूता वयं सतारैः फूत्कारैः समाक्रंदनागिरः
रे बाले त्वं कासितव सन्मुखं न विलोकयामः ३२ ७ ७ ७

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मानेति स्वधियांपुरुषाणांकेवलमेतदेवयुक्तंयत् जन्हुकन्यापयःपूतग्रावगिरीद्रकंदरदरी श॰
कुंजेनिवासः क्वचित्जन्हुकन्यायाः गंगायाः पयसापूताः पवित्रायेग्रावाणः तेषामसौगिरींद्रः २
पर्वतः तस्यकंदरस्यविवरस्ययादरीगुहातस्यानिकुंजः तस्मिन्नत्रनिवासोवरंक्वसतिमानेम्ला

मानेम्लायिनिखंडितेचवसुनिव्यर्थेप्रयातेर्थिनिक्षीणेबंधुजनेगतेपरिजने
नष्टेशनैर्यौवने युक्तंकेवलमेतदेवसुधियांयज्जन्हुकन्यापयः पूतग्रावगि-
रींद्रकंदरदरीकुंजेनिवासःक्वचित् २२ यिनिचान्यद्वसुनिखंडितेसतिचान्यदर्थि-
नियाचकेव्यर्थेप्रयातेसतिचान्यत्क्वसतिक्षीणेबंधुजनेसतिपुनः क्वसतियौवनेनष्टेसतितदाव १७
नवासएवरुचिरः ३३ ३२ ६ ६ ६ ६

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परेषामिनि हा इति खेदे त्वं हृदयं बहुप्रसादं किं नेतुं गृहीतुं विशासि किं कृत्वा परेषां चेतांसि प्रतिदिव
सं आराध्य किं प्रसादं क्लेशकलितं कष्टमलिनं हे हृदय त्वयि अंतर्मध्ये प्रसन्ने सति अभिलषितं वांछितं
ते तव न पुष्यति किं त्वयि स्वयमुदित चिंतामणिगुणो किं विमुक्तः संकल्पः ३४ स्रक्चंदनवनितादि भोगे रो

परेषां चेतांसि प्रतिदिवसमाराध्य बहुहा प्रसादं किं नेतुं विशासि हृदये क्लेशकलितं
प्रसन्ने त्वय्यंतः स्वयमुदित चिंतामणिगुणे विमुक्तः संकल्पः किमभिलषितं पुष्याति
न ते ३४ अथ भोगपद्धतिः भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं मौने दैन्यभयं
बले रिपुभयं रूपे जराया भयम् गात्भयं भीतिः स्रक्चंदनादिशीतलेन वातोत्पत्तिर्भवति स्त्रीभो
गेन बलहानिर्भवति कुले च्युतिभयं दोषः कस्य कुले नास्तीति न्यायेन बहुकुलं यत्र तदा दोषो भवत्येव दोषेण
पतति च्युतं भवति अथवा मरणेन कुलक्षयो भवति वित्ते नृपालात् राज्ञः सकाशाद्भयं भवति मौने मौनर

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्यांअथवानाकिंविद्ददतिनयाचतितस्यकोवाददातिअतः दैन्यंभवति बलअतिबलिष्ठोरिपुभयेभवति रूपेसौंदर्येजरायावार्द्धक्येन विरूपताजायते शास्त्रेशास्त्रपाठनेवादिनोंभयंपुण्येसद्गुणे खलभयं विपरीतदोषारोपणंकरोति कायेशरीरेमृत्युभयंएवंसर्ववस्तुजातंभुविभयान्वितंवर्त्तते अतोवैराग्यमे वाभयंसर्वपदार्थेषुवैराग्यवान् पुरुषः नयान्चयतिविरोधंनैवकरोतिसर्वभवीतरागः ३५ अमीषाम्ि

शास्त्रेवादभयंगुणेखलभयंकायेकृतांताद्भयंसर्वंवस्तुभयान्वितंभुविनृणांवैराग्यमे वाभयं ३५ अमीषांप्राणानांतुलितबिसिनीपत्रपयसांकृतेकिन्नास्माभिर्विगलितवि वेकैर्व्यवसितम्

ति अस्माभिरमीषांप्राणानांकृतेकिंनव्यवसितंउद्यामितं कथंभूतैः अस्माभिर्वि गलितविवेकैर्विगलितोभ्रष्टोविवेकोयेषांतैर्विवेकरहितैः यदाढ्यानामग्रेधनवतांपुरः वीत व्रीडै- १८

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गेतलज्जैरस्माभिः निजगुणकथापातकमपिकृतं निजगुणानांकथयापातकं निजगुणकथापा
तकं किंभूतानां आढ्यानांद्रविणमदनिः शंकमनसांद्रविणमदेनधनमदेनानिः शंकं मनो
येषांतेषां ३६ भ्रातइति तस्मैकालायनमः अहोइत्याश्चर्येभोभ्रातर्महान्कष्टंविडोस्य

यदाढ्यानामग्रेद्रविणमदनिःशंकमनसांकृतंवीतव्रीडैर्निजगुणकथापातक
मपि ३६ भ्रातःकष्टमहोमहान्सनृपतिःसामंतचक्रंचतत्पार्श्वेतस्यचसापिरा
जपरिषत्ताश्चंद्रबिंबाननाः

तां किंकष्टंसएवमहान्भूपतिः चान्यत्सामंतचक्रंचान्यत्तस्य
पार्श्वेसापिराजपरिषत्सापिराजसभाचान्यत्ताश्चंद्रबिंबाननानार्यः चान्यत्सराजपुत्रनिवहः नृ
पकुमारसमूहः कथंभूतोराजपुत्रनिवहउद्रिक्तः सदर्पः चान्यत्तेवंदिनः भद्राश्चान्यत्ताः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ०वै० कृतक्रीडांकुरुतेतस्याक्षौपाशकौविलोकातेअत्रकालः क्रीडकः अत्ररजनिदिवसावेवपा शा०
२० शकौ इत्थंकथयन्नकश्चिदपिगृहेअनेकः एकस्तत्रातिष्ठति अपिपुनः यत्रएकस्तत्रबहवः यत्र १
बहवस्तत्रएकोपिनकालक्रीडायाइत्थंस्वभावः ३९ तपेतिजनैलौकेनाविद्मः वयंकिंकुर्म्मः कि

इत्थंचेमौरजनिदिवसौदोलयन्द्वापिवाक्षौकालःकाल्यासहबहुकलःक्रीड
तिप्राणसारैः ३९ तपस्यंतःसंतःकिमधिनिवसामःसुरनदींगुणोदर्कान्
दारानुतपरिचरामःसविनयम् मिति संशयेसुरनदींगंगांनिवसामः आश्रमंकु

र्म्मः किंवयंतपस्यंतः संतः तपः कुर्वंतः संतउत अथवा दारान् कलत्राणिपरिचर्य्यांकुर्म्मः २०
कथंभूतान् दारान्गुणोदर्कान् गुणोत्कटान् उतअथवाशास्त्रौघान्पिबामः शृणुमः किंशा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्त्रौघान्द्रुतविविधकाव्यामृतरसान्द्रुतः स्नुतः विविधामृतरसोयेषुतान्वयंनविद्मः
अस्माकंसंशयोवर्त्तते एतेषु पदार्थेषु किंकुर्म्मः योगुणाधिकस्तंसेवयामः ४० गंगेतिकिमि

पिबामःशास्त्रौघानुद्भुतविविधकाव्यामृतरसान्नविद्मःकिंकुर्मःकतिपयनि
मेषायुषिजने ४० गंगातीरेहिमगिरिशिलाबद्धपद्मासनस्यब्रह्मध्यानाभ्य
सनविधिनायोगनिद्रांगतस्य

ति संभावनायाम् ममतैः स्वदिवसैर्भाव्यं यत्र
दिवसेषुजरठ हरिणाः प्रौढमृगानिर्विशंकाः संतः शृंगकंडूविनोदंशृंगघर्षणलीलांसं-
प्राप्स्यंते कथंभूतस्यमहिमगिरिशिलायांबद्धंपद्मासनंयेन तस्य कगंगातीरे पुनः किंभूत
स्यममयोगनिद्रांगतस्ययोगस्यनिद्रायोगनिद्रातांगतःप्राप्तः तस्यकेनब्रह्मध्यानाभ्यस-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ·वै· नविधिनाब्रह्मध्यानस्याभ्यसनंब्रह्मध्यानाभ्यसनंतस्ययोविधिः ब्रह्मध्यानाभ्यसनविधि शा·
·१ स्तेन एवंविधेन निर्मलभावेन स्फरत्वसाध्य सिद्धा सिद्धिः ४१ स्फुरदिति वयं शिवशिवशिवेत्या २
नेवनसा कदास्यामः किंविशिष्टावयंभवाभोगोद्विग्नाभवस्यसंसारस्याभोगस्तेनोद्विग्नाः

किंतैर्भाव्यंममस्कादिवसैर्यत्रते निर्विशंकाः संप्राप्स्यंतेजरठहरिणाःशृंग
कंडूविनोदम्‌ ४१ स्फुरत्स्फारज्योत्स्नाधवलिततलेक्कापिपुलिनेसुखासीनाः
शांतध्वनिषुरजनीषुद्युसरितः

किंभूतेनवचसाआनंदोद्गतबहुलबाष्पप्लुतदृशाआनं-
देनोद्गतानि बहुलानियानिबाष्पाणि तैः प्लुतेदृशौयास्मिन्तद्वचस्तेन किंभूतावयंद्युसरितोगंगा २१
याक्कापिनिर्विजनेपुलिनेसुखासीनाः कासुरजनीषु किंभूतासुरजनीषुशांतध्वनिषुउप-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शांतशब्दास्कृएवंविधावासराभाग्यहीनानांनभवेयुः ४२ महादेवेतिदेवोमहादेवोनान्यःसरि
दपितद्यापिस्कृरसरित्स्कृरनदीअगारंगृहंगुहाएववसनमपिवस्त्रमपिताएवहारितोदिशः

भवाभोगोद्विग्नाः शिवशिवशिवेत्यार्तवचसाकदास्यामानंदोद्भूतबहु
लबाष्पप्लुतदृशा ४२ महादेवोदेवःसरिदपिचसेवास्कृरसरित्गुहाएवा
गारंवसनमपिताएवहरितःस्कृहद्वाकालोयंव्रतमिदमदैन्यव्रतमिदंकि
यद्वावक्ष्यामोवटविटपएवास्कृदयिता ४२ ❀ ❀

अथवास्कृहन्मित्रमयंकालः इदमदैन्यव्रतं इदंव्रतंकियद्वक्ष्यामः दयिताकलत्रंवटविट
पएवास्कृ ४३ श्रीगोपालकृष्णायनमः श्रीरामचंद्रायनमः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰वै॰ शिर इति शार्वं महेशशिरः स्वर्गादधोवर्त्तनेपततिशिरस्तः महेश्वर मस्तकात् अधः क्षितिधरं श॰
२२ जानाहि उच्चुंगान्महीध्रात् अवनिमधोजानीहि अवनेश्चापिजलधिं समुद्रं अधोजानीहि स्तोकं ३
गंगेयंपदं अधोधः उपगता अथवाविवेकभ्रष्टानांप्राणिनांविनिपातः शतमुखोभवति ५४

शिरःशार्वंस्वर्गात्पशुपतिशिरस्तःक्षितिधरंमहीध्रादुत्तुंगादवनिमवनेश्चापि
जलधिम् अधोगंगासेयंपदमुपगतास्तोकमथवाविवेकभ्रष्टानांभवतिवि
निपातःशतमुखः ५४ आशानाममनदीमनोरथजलातृष्णातरंगाकुलाराग
ग्राहवतीवितर्कविहगाधैर्यद्रुमध्वंसिनी

आशेति नामेति संबोधने आशानदी २२
आस्तिकिं आशानदीमनोरथाएवजलानियस्यांसापुनः किंभूता तृष्णा तरंगाकुला पुनः किं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आशानदीरागग्राहवतीस्नेहग्राहयुक्ता अन्यापियानदीग्राहजलचरजीववती भवति पुनः किं आशानदीवितर्कविहगावितर्कोविचारस्तएवविहगाःपक्षिणोयस्यां सानद्यामपि विहंगाभवंति अस्यामपितथैव पुनः किं आशानदीमोहावर्त्तसुदुस्तरामोहस्यावर्त्तोमोहावर्त्तस्तेनसुदुस्तरा अन्यापिनदी आवर्त्तैः दुस्तराभवति पुनः किं आशानदीअतिगहना अ

मोहावर्त्तसुदुस्तरातिगहनाप्रोत्तुंगचिंतातटी तस्याःपारगताविशुद्धमनसो
नंदंतियोगीश्वराः ४५

तीवगहनं यस्यां अन्यापि नदी अतिगहनापुनःकिंभूताआशानदीधैर्यद्रुमध्वंसिनीधैर्यद्रुमस्यध्वंसोऽस्यास्तीतिधैर्यद्रुमध्वंसिनी अन्यापिनदीद्रुमध्वंसिनी भवतिपुनःकिं प्रोत्तुंगचिंताएवतटीयस्याः सा अन्यापिनदीतटिनीप्रोच्यते तस्यानद्याः पारंग

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तायोगीश्वरानंदंतिसर्वोत्कर्षेणवर्तंते किंभूताः योगीश्वराः विशुद्धमनसोनिर्मलमानसाः ४५
आसंसारमिति हेतात ताहक्कोपिपुमान् अस्माकंनयनपदवींनेत्रगोचरं वाथवाश्रोत्रवर्त्म
श्रोत्रमार्गंनागतः योयंक्षीबस्यांतःकरणकरिणः संयमालानलीलांधत्तेकिंभूतोयंविषयकरि

आसंसारंत्रिभुवनमिदंचिन्वतांतातताहक्नैवास्माकंनयनपदवींश्रोत्रवर्त्मा
गतोवा योयंधत्तेविषयकरिणीगाढगूढाभिमानः क्षीबस्यांतःकरणकरिणः
संयमालानलीलाम् ४६ णीगाढगूढाभिमानः विषयएवकरिणी हस्तिनीतस्यांगा
ढगूढअत्यंतं आरूढो अभिमानोयस्य किंभूतानामस्माकं आसंसारं यावत् इदंत्रिभुवनंचि-
न्वनां संचयतां वर्द्धयतांयोजितेंद्रियः सोऽखिलः ४६ ७ ७ ७



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

येचर्ईनइति अर्हंतेषांवासराणांअंतः स्फुरित हसितंध्यानच्छेदे स्मरेयंचिंतयामियेवासरा धनपतिपुरोधनाढ्यानांपुरस्तात्प्रार्थनादुःखेनदीर्घावर्तेतेनेप्रार्थनादुःख दीर्घाः चाल्पयेवा सराः विषयाक्षेपपर्यस्तावुद्धिर्यस्यसविषयाक्षेपपर्यस्तबुद्धिस्तस्यकिंभूतोहंशिखरिकुह

सांप्रतंनिर्वेदतायाःस्वरूपमाह येचर्ईतेधनपति पुरःप्रार्थनादुःखभा
जोयेचाल्पत्वंदधतिविषयाक्षेपपर्यस्तबुद्धेः तेषामंतःस्फुरितहसितंवास
राणांस्मरेयंध्यानच्छेदेशिखरिकुहरग्रावशय्यानिषण्णः ४७

रेयाग्रावशय्या
तस्यांनिषण्णः वाशिखरि कुहरस्यपर्वतविवरस्यग्राग्रावशय्यानत्रनिषण्णःनिविष्टः ४७

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ. वै. २४

विद्यानेति अहो अयं कालो ऽस्माभिः परपिंडलोलुपतया काकैरिव प्रेरितः परपिंडस्य परग्रा सस्य लोलुपतानतया कथमस्माभिर्विद्यानाधिगता न पठिता किंभूता विद्या कलंकरहिता दोषरहिता इत्यर्थः चान्यद्वित्तं नोपार्ज्जितं अपि पुनः समाहितेन मनसा निश्चलचित्तेन पित्रोर्मातृज

श. २

विद्या नाधिगता कलंकरहिता वित्तं च नोपार्ज्जितं शुश्रूषापि समाहितेन मन
सा पित्रोर्न संपादिता आलोलायतलोचना युवतयः स्वप्नेपि नालिंगिताः का
लोयं परपिंडलोलुपतया काकैरिव प्रेरितः ४८

नकयोः शुश्रूषापि न संपादिता न कृता चान्यत्स्वप्नेपि युवतयो नालिंगिताः किंभूता युवतयः आलोलायतलोचनाः आसमंताद्भावेन लोलानि चपलानि आयतानि दीर्घाणि लोचनानि यासां ताः तस्मात्कारणात् मुधैव जन्म गमितम् ४८

२४

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विस्तीर्णे इति वयं पुण्ये पवित्रे ऽरण्ये कदा त्रियामां नेष्यामः कैः समं परिणतिशरच्चंद्रकिरणैःस
मं परिणतयः परिणामं प्राप्ता ये शरत्कालीनाः चंद्रकिरणाः परिणतिशरच्चंद्रकिरणास्तैः क्व सति
सर्वस्वे सर्वधने विस्तीर्णे सति किंभूता वयं तरुणकरुणापूर्णहृदयाः तरुणकरुणया पूर्णं हृदयं

विस्तीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः स्मरंतः संसारे विगुणपरिणामावधिगतीः वयं पुण्यारण्ये परिणतिशरच्चंद्रकिरणैस्त्रियामां नेष्यामो हरचरणचित्तैकशरणाः ८९

येषां ते तरुणकरुणापूर्णहृदया वयं किं कुर्वंतः संसारे विगुणपरिणामावधिगतीः स्मरंतः विगुणपरिणामावधयो गतयः विगुणपरिणामावधिगतयस्ताः पुनः किंभूता वयं हरचरणचित्तैकशरणाः हरचरणावेव चित्तस्य एकं शरणं येषां ते वयम् ८९ ७

भर्तृ॰ वयमिति हे राजेंद्र इहास्मिन्संसारे वल्कलैः कृत्वा परितुष्टाः चान्यत्त्वं च लक्ष्म्या परितुष्टः अ श॰
२५ त एतावता संतोषस्य तत्त्वमेक एव इहास्मिन्नर्थे परितोषः सम एव किंभूतः परितोषः निर्विशेषा ३
वशेषः निर्विशेष एव अवशेषोऽवसानं यस्य स निर्विशेषावशेषः विशेषश्चायं तु पुनः स दरि

वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या सम इह परितोषो निर्विशेषावशेषः स तु भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ५०

द्रो भवति यस्य पुरुषस्य विशाला विस्तीर्णा तृष्णा अनंततृष्णस्य पुंसः द
रिद्रं कापि न यातीत्यागमः तु पुनः मनसि परितुष्टे सति कोऽर्थवान् को दरिद्रः अपि तु न कोपि २९



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यदेति तदहंनजानेएषाकस्यतपसः परिणतिः परिणामोवर्नेते एषाकापरिणातिः यदेतत् स्वाच्छंद्यंविहरणंअन्यच्चाकार्पण्यंअशनंमबलंभोजनंअन्यच्चसहायैः संवासः परिकरैः सहनिवासः उपशमैकव्रतफलंउपशमरसोल्लासितंश्रुतंशास्त्रंबहिरपिबाह्यप्रदेशेऽपिम

यदेतत्स्वाच्छंद्यंविहरणमकार्पण्यमशनंसहायैःसंवासःश्रुतमुपशमैक
व्रतफलम् मनोमंदस्पंदंबहिरपिचिरस्यापिविमृशन्नजानेकस्यैषापरि
णतिरुदारस्यतपसः ५१

नोमंदस्पस्पंदंकल्पनारहितं अहंकिंकुर्वन् चिरस्य चिरात्रायविमृशन् विमृशतांकुर्वन् चिरकालंविचिंतयन्नित्यर्थः ५१ ८ ६

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰ वै॰ पाणिरिति धन्यास्तुते एव ये कर्म निर्मूलयंति किंभूताः धन्याः संन्यस्तदैन्यव्यतिकरानिकराः संन्य श॰
२६ स्तो निराकृतः दैन्यव्यतिकरस्यानिकरो यैस्ते पुनः किंभूतास्ते स्वात्मसंतोषिण स्वात्मन्येव संतोषो २
येषां ते अन्यच्च येषां पुरुषाणां निःसंगतांगीकरणपरिणतिः निःसंगतायाः अंगीकरणं निःसंगतां
गीकरणं तस्य परिणति निःसंगतांगीकरणपरिणतिः येषां पुरुषाणां पात्रं भोजनभांडं पाणिः हस्तः प

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्ष्यमक्षय्यमन्नं विस्तीर्णं वस्त्रमाशासुदश
कममलं तल्पमस्वल्पमुर्वी येषां निःसंगतांगीकरणपरिणतिः स्वात्मसंतोषि
णस्ते धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्मनिर्मूलयंति ५२ वित्रं भ्रमणपरिगतं भै २६
क्ष्यं अक्षय्यमव्ययं अन्नं अधं वस्त्रं विस्तीर्णं आशादशकं अमलं निर्मलं अस्वल्पं विस्तीर्णं शय्या
उर्वी पृथ्वी एवंविध रूपेण ये संसारपारं गच्छंति त एव धन्याः ५२ ७

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हे सखे जगति रसायां विदुषः पंडितस्य तपसः अन्यत्नान्यत् श्रेयः कल्याणं न कथं स्वामी आधिप
तिः दुराराध्यः क्षितिभुजो राजानः तुरगचलचित्ताः तुरंगवच्चलचेतसः तु पुनः वयं स्थूलेच्छाः चान्य
महति पदे मुक्तिलक्षणे बद्धमनसः जरा देहं हरति मृत्युरिदं सकलं जीवितं हरति ततस्तपसा

दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो वयं तु स्थूलेच्छा महति च पदे बद्ध-
मनसः जरा देहं मृत्युर्हरति सकलं जीवितमिदं सखे नान्यच्छ्रेयो जगति विदुषोन्य
त्र तपसः ५१ भोगा मेघवितानमध्यविलसत्सौदामिनीचंचला आयुर्वायुविघट्टि
ताभ्रपटलीलीनांबुवद्भंगुरम् रिनाश्रेयोन ५१ भोगा इति हे बुधाः योगे मनोवचनकाय
संरोधलक्षणे बुद्धिं विदध्वं इतरद् अखिलं नृणां तु पश्यायं कथं भोगाः पंचांगाः मेघवितानमध्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ॰ वै॰ विलसत्सौदामिनीवंचलाः मेघवितानमध्ये विलसंती यासौदामिनी विद्युत्तद्वच्चंचलाश्चप श॰

२७ लाः चान्यदायुर्जीवितंवायुविघट्टिताभ्रपटलीलीनांबुवद्भंगुरं वायुविघट्टितायाभ्रपटली १

तत्रलीनं यदंबुपानीयंतद्वद्भंगुरं विनाशशीलं तनुभृतां प्राणिनां यौवनलालनालारुण्यातिपा

लोलायौवनलालनातनुभृतामित्याकलय्य द्रुतं योगे धैर्यसमाधिसिद्धिसु
लभे बुद्धिं विदध्वं बुधाः ५४ पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपा
लीमादाय न्यायगर्भद्विजमुखहुतभुक्भूमधूम्रोपकंठम्

लना लोलाचंचलावर्त्त
ते इति आकलय्य इति विचिंत्य द्रुतं शीघ्रं योगे मनो विदध्वं किंभूते योगे धैर्यसमाधिसिद्धिसुल २७
भे ५४ पुण्येति मानी प्राणी अभिमानी पुमान् क्षुधार्तः स धन्यः सुखुवरं उदरदरीपूरणाय द्वारं द्वारं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

